# यन्त्रोद्धारकहनूमत्स्तोत्रम्

नमामि दूतं रामस्य सुखदं च सुरद्रुमम्[1] ।
पीनवृत्तमहाबाहुं सर्वशत्रुनिवारणम् ॥ १ ॥

नानारत्नसमायुक्तकुण्डलादिविराजितम् ।
सर्वदाऽभीष्टदातारं सतां वै दृढमाहवे[2] ॥ २ ॥

वासिनं चक्रतीर्थस्य दक्षिणस्थगिरौ सदा ।
तुङ्गाम्भोधितरङ्गस्य वातेन परिशोभिते ॥ ३ ॥

नानादेशागतैः सद्भिः सेव्यमानं नृपोत्तमैः ।
धूपदीपादिनैवेद्यैः पञ्चखाद्यैः स्वशक्तितः[3] ॥ ४ ॥

भजामि श्रीहनूमन्तं[4] हेम[5]कान्तिसमप्रभम् ।
व्यासतीर्थयतीन्द्रेण पूजितं प्रणिधान[6]तः ॥ ५ ॥

त्रिवारं यः पठेन्नित्यं स्तोत्रं भक्त्या द्विजोत्तमः ।
वाञ्छितं लभतेऽभीष्टं षण्मासाभ्यन्तरे खलु ॥ ६ ॥

पुत्रार्थी लभते पुत्रं यशोऽर्थी लभते यशः ।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्[7] ॥ ७ ॥

सर्वथा माऽस्तु सन्देहो हरिः साक्षी जगत्पतिः ।
यः करोत्यत्र सन्देहं स याति नरकं ध्रुवम् ॥ ८ ॥

इति श्रीव्यासराजविरचितं यन्त्रोद्धारकहनूमत्स्तोत्रम्

भारतीरमणमुख्यप्राणान्तर्गत श्री कृष्णार्पणमस्तु

---

[1] सुखरूपिणम्
[2] चैवासतां न हि
[3] च शक्तितः
[4] हनुमत्पादं
[5] हंस
[6] च विधान
[7] धनमाप्नुयात्